# अथ कश्यपस्मृतिः

## प्रायश्चित्तवर्णनम्

अथ काश्यपीयान् गृहस्थधर्मान् व्याख्यास्यामः

आहिताग्निः स्वदारनिरतोऽचाग्नयग्निहोत्री स्नातामृतुकालगामी देवपितृमनुष्यभूतब्रह्मयज्ञानुसेवमानः एकद्वित्रिचतुर्णां ब्राह्मणान् कुर्वाणो व्रतनियमहोमजाप्यपरो मातृपितृभक्तो दारापत्यपोषकः शेषानुभोजी उपवासी त्रैवर्णिकमेदकसूतकान्नपरिहरमाणोऽलांगलवृत्तिः । तत्र च भूम्यपोढने वृक्षच्छेदने नास्यधर्मोभवति ।

कूपसेतुतडागविप्रदेवतायतनभेदने प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य चतस्त्रआहुतीर्जुहुयात् ।

इदं विष्णुरिति प्रथमा मानस्तोक इति द्वितीया स्ववासा इति तृतीया दंष्ट्राभ्यामिति चतुर्थीरत्यस्त्रपोढयेत् तस्यैव देवतायै पूर्णाहुतिं जुहुयात् ।

अथ गोबलीवर्दमहिषधूर्याविकहिंसावाप्तौ प्रायश्चित्तकामकारतामित्येके । दोग्धृदमनपर्यस्तपाषघट्टनघंटाभरणभूषणयोजन तैलमंडौषधभेषज्यत्रितय-माणे व्याप्तानामकामावाप्तचै प्रायश्चित्तंब्राह्मणेभ्यो निवेद्य सशिरक्षुरवपनं कृत्वा प्राजापत्यं कृच्छ्रमाचरेत् । चीर्णंते गां दद्यात् । तिलधेनुं जल-धेनुं चेतिकाश्यपः ।

अथ मृगमहिषगंडुकवराहशरभऋृक्षसिंहव्याघ्रमंडूकशूकर मत्स्यग्राह-शिशुमारादीनां वधेष्वहोरात्रं । चीर्णंते गां दद्यात् । मेष स त्रिरात्रं चीर्णान्ते हिरण्यं दद्यात् ।

अथ काक-वलाक-हंस-सारस-कारण्डव-चक्रवाक-गृध्रश्येन-खंजरीट-टिट्टिभोलूक-शुक सारिकामयूरकाक-मद्र कलविंक-कपोत कपिंजलादीनां वधेष्वहोरात्रं चीर्णान्ते तिलान्दद्यात् ।

अथातः श्व-जम्बूक-विडाल-ऋृषभरक्षुवासतोष्ट्र शूद्रवधे त्रिरात्रं च प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य प्राजापत्यं कृच्छ्रं चरेत् । चीर्णान्ते सव्रीहीन् दद्यात् ।

कृकलास-सर्पनकुल-विडालगोजावधे त्रिरात्रं चीर्णान्ते लोहं दद्यात् ।

येषां व्यापादने प्रायश्चित्तमुक्तं तेषामेवोच्छिष्टभोजने प्राणायामशतंकृत्वा घृतं प्राश्य शुद्धः स्यात् ।
जातमृतकसूतके ब्राह्मणो दशरात्रेण क्षत्रियः पंचदशकेन वैश्योविंशतिरात्रेण शूद्रो मासेन शुद्ध्यति । तच्चेदंतःपुरवापतंति तत्समेन शुध्यावस्वहः । अब्राह्मणो न जायते नाधीयीत नाध्यापयेत् न दद्यात् न प्रतिगृह्णीयात् । अशुचिर्द्विपदे चतुष्पदे नादितदहः ।
अथानशनमृतानामशनिहतानां वा अग्निप्रविष्टानां भृगुपतनसंग्रामदेशांतरमृतानां वा गर्भविनिःसृतानां त्रिरात्रेण शुद्धिरुच्यते ।
अथ लशुन-पलांडुगृञ्जन-कुंभीकुक्कुटभक्षणे सुरासीधुमधुमद्यपाने अयाज्ययाजने पतितसावित्र्युपनयने तैः प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य यत्र ग्राममृगाणां पशूनां शब्दो न श्रूयते तस्मिन्प्रदेशे अग्निं प्रणिपरिसमुह्य पर्य्युपरिस्सर्य सशिखवपनं कृत्वा प्राक् प्रणीतेन विधिना पुनः संस्कारमर्हन्तीति ।

## अथ पञ्चमहापातकाः प्रवक्ष्यन्ते

ब्राह्मणो नैव हन्तव्यः स्वस्वप्रक्षेपया द्विजैः
सुवर्णहरणं चैव कर्तव्यं न कथंचन १
सुरुपत्नीं न गच्छेत संस्पर्शश्च न तैश्चरेत्
महापातकसंज्ञेया निर्दिष्टानां मनीषिभिः २
वत्सरत्रितयं कुर्यात् नरः कृच्छ्रं विशुद्धये
आत्मतुल्यसुवर्णं च दद्याद्वाविप्रतुष्टिकृत् ३
आत्रेयीगर्भं राजन्यवैश्यौ यज्ञगतौ हत्वा एतदेवकुर्यात् ।

## अथाकालिव्याख्यास्यन्नाह

अविनिरटकविद्य तवज्रनिर्घातप्रपतने भूमिचलने चैवाथनिम्नोत्तरे चैव प्रायश्चित्तं ब्राह्मणेभ्योनिवेद्य समीमयीनां समिध मधुदधिघृताक्तानामष्टसाहस्त्रं जुहुयात् । शन्नोदेवीति काश्यपः ।
यत्र वेश्मनि उलूकोनिपतति । गृहं गोधाकपोतः प्रविशति ।

कृष्टः शकुनिः श्येनो वा रथभुज्येवानिपतति । वल्मीक दीपिकागृहे पुरो ददति । शृगापुरोहणे कपाटघंटापुरोहणे चैव प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य शमीमयीनां समिधदधिमधुघृताक्तानामष्टसहस्त्रं जुहुयात् वास्तोस्पते इति काश्यपः ।

अथ नैमित्तिकानि व्याख्यास्यामः

क्षीरभाण्डभेदने मंथने भंजने पुरोहललांगल गलचक्रतूपपतने रथविपर्य्यासने अश्वभंजने रजस्वला-शवस्पर्शने आदित्यास्तमने संद-मंदेदुःस्वप्नदर्शने कर्णकेशपतिपुरोहणे यूपस्थलस्पर्शन मृतकसूतक भोजने चैव ब्राह्मणेभ्यो निवेद्य सचैले कृत्वा स्वप्रतिरथं जपेदिति काश्यपः ।

अथातः पात्राणां शौचविधि व्याख्यास्यामः

पलेखने न दारुपत्रे भस्मनांकांस्यं शीश्रुतास्त्रायसानां सिकताभिः शौचं । दंतशंखमणिराजतसौवर्णानां घर्षणं । मृण्मयानां पुनर्दहनं । धान्यवाससां वहूनां प्रोक्षणं काष्ठ रज्जुत्वक्चर्म चीर वेणु विदलपत्रपर्णानां चलवच्छौचम् ।

अथ पूर्व पापकर्मणां चिह्नं व्याख्यास्यामः

अगम्यागामी दुश्चर्मा तस्मात्प्रायश्चित्तं वेदात्मविशुद्धये । एतान् श्राद्धेपरिवर्जयेत् ये चान्ये पंक्तिदूषकाः । क्षट्टघटा चा घटानटा प्रव्रजितरंगारतानिदेवलकनक्षत्रजीवकग्रामयाजकपर्य्याहित-पर्य्याधारकविविंदकपौनर्भवानाश्नंति । अदन्तादेके नाश्नंति । भार्याजितस्य नगरग्रामयाजकेभ्यः अविश्रस्तघाती व्यंगोनक्षत्र सूचकाः ।
वर्जनीयाद्विजाह्येते श्राद्धकर्मसु नित्यशः
दाराधीनाः क्रियाः सर्वा दाराः स्वर्गस्य साधनं ४
इत्येतत्ब्रह्मणाप्रोक्तं काश्यपस्यानुशासनम्
सप्त पौनर्भवा कन्या वर्जनीया कुलाधमाः ५
वाचा दत्ता मनोदत्ता कृतमंगलकौतुका

उदकस्पर्शका या च या च पाणिग्रहीतिका ६
अग्न्युपायं गता या च पुनर्वाह्यस्य वादिका
इत्येताः कश्यपप्रोक्ता दहेयुः कुलमग्निवत् ७
प्ररोहत्यग्निमादाय पादपानां कुलंमहत्
न हि पुनर्भवादीनां कुलं तस्य प्ररोहति ८
पिता वा यदि वा भ्राता माता वा यदिवेतरः
नरश्च कृतपापानां गति यां याति तां शृणु ९
मनिवर्ती यथा श्येनो गच्छत्येव यमालयं
एवं च नरकं याति कन्या अमृतकारका १०
पुनः सम्पद्यते नारी गतमात्मानमात्मनि
अस्थिमात्रं त्वचं भित्वा शुक्रं तेजोबलं तथा ११
शुद्धिं न ये प्रयच्छंति दुहितरं लोभमोहिताः
तेषां तु नरके घोरे याति वै सप्तमं कुलम् १२
गमनागमनायोगात् एवं शुक्रे विधीयते
एवं ज्ञात्वा युक्तकन्यां विंदेत स तत्कुलात् १३
नस्याद्दैवे च पित्र्ये च दासीस्यादथ संचिता
क्रयक्रीता तु सा दासी न सा पत्नी विधीयते १४
अग्निष्टोमातिरात्राणां शतं शतगुणी कृतम्
प्राप्नोति पुरुषोदत्वा होममंत्रै रलंकृताम् १५
यस्तु सात्यमधर्मेण पिता समर्पयेत् सुताम्
स प्रेत्य लभते स्थानं यथा दक्ष प्रजापतिः १६

इति काश्यप प्रणीतं धर्मशास्त्रं समाप्तम्

Reference:
"Kashyapa Smriti," in Shastri, Rajguru Haridatt, ed., *The Smriti Sandarbha: Collection of Thirteen Dharmashastric Texts by Maharshis, Vol. IV*, Delhi: Nag Publishers, 1988, pp. 2485-2490.